॥ श्रीदक्षिणामूर्ति अष्टोत्तर शतनामस्तोत्र ॥

॥ अथ ध्यानम्॥

वटवृक्ष तटासीनं योगी ध्येयांघ्रि पङ्कजम्।
शरश्चन्द्र निभं पूज्यं जटामुकुट मण्डितम् ॥ १॥

गङ्गाधरं ललाटाक्षं व्याघ्र चर्माम्बरावृतम्।
नागभूषं परंब्रह्म द्विजराजवतंसकम् ॥ २॥

अक्षमाला ज्ञानमुद्रा वीणा पुस्तक शोभितम्।
शुकादि वृद्ध शिष्याढ्यं वेद वेदान्तगोचरम्॥ ३॥

युवानां मन्मथारातिं दक्षिणामूर्तिमाश्रये।
॥ अथ दक्षिणामूर्ति अष्टोत्तर शतनाम स्तोत्रं ॥

ॐ विद्यारूपी महायोगी शुद्ध ज्ञानी पिनाकधृत् ।
रत्नालंकृत सर्वाङ्गी रत्नमौळिर्जटाधरः ॥ १॥

गङ्गाधर्यचलावासी महाज्ञानी समाधिकृत्।
अप्रमेयो योगनिधिर्तारको भक्तवत्सलः॥ २॥

ब्रह्मरूपी जगद्व्यापी विष्णुमूर्तिः पुरातनः ।
उक्षवाहश्चर्मवासाः पीताम्बर विभूषणः॥ ३॥

मोक्षदायी मोक्ष निधिश्चान्धकारी जगत्पतिः।
विद्याधारी शुक्ल तनुः विद्यादायी गणाधिपः॥ ४॥

प्रौढापस्मृति संहर्ता शशिमौळिर्महास्वनः ।
साम प्रियोऽव्ययः साधुः सर्व वेदैरलङ्कृतः ॥ ५॥

हस्ते वह्निधरः श्रीमान् मृगधारी वशङ्करः ।
यज्ञनाथ क्रतुध्वंसी यज्ञभोक्ता यमान्तकः॥ ६॥

भक्तानुग्रह मूर्तिश्च भक्तसेव्यो वृषध्वजः ।
भस्मोध्दूलित सर्वाङ्गः चाक्षमालाधरोमहान् ॥ ७॥

त्रयीमूर्तिः परंब्रह्म नागराजैरलङ्कृतः ।

शान्तरूपो महाज्ञानी सर्व लोक विभूषणः ॥ ८॥

अर्धनारीश्वरो देवोमुनिस्सेव्यस्सुरोत्तमः ।
व्याख्यानदेवो भगवान् रवि चन्द्राग्नि लोचनः ॥ ९॥

जगद्गुरुर्महादेवो महानन्द परायणः ।
जटाधारी महायोगी ज्ञानमालैरलङ्कृतः ॥ १०॥

व्योमगङ्गा जल स्थानः विशुद्धो यतिरूर्जितः ।
तत्त्वमूर्तिर्महायोगी महासारस्वतप्रदः ॥ ११।
व्योममूर्तिश्च भक्तानां इष्टकाम फलप्रदः ।
परमूर्तिः चित्स्वरूपी तेजोमूर्तिरनामयः ॥ १२॥

वेदवेदाङ्ग तत्त्वज्ञः चतुःष्षष्टि कलानिधिः ।
भवरोग भयध्वंसी भक्तानामभयप्रदः ॥ १३॥

नीलग्रीवो ललाटाक्षो गज चर्मागतिप्रदः ।
अरागी कामदश्चाथ तपस्वी विष्णुवल्लभः ॥ १४॥

ब्रह्मचारी च सन्यासी गृहस्थाश्रम कारणः ।
दान्तः शमवतां श्रेष्ठो सत्यरूपो दयापरः ॥ १५॥

योगपट्टाभिरामश्च वीणाधारी विचेतनः ।
मतिप्रज्ञा सुधाधारी मुद्रापुस्तक धारणः ॥ १६॥

वेतालादि पिशाचौघ राक्षसौघ विनाशनः ।
राज यक्ष्मादि रोगाणां विनिहन्ता सुरेश्वरः ॥

॥ इति श्री दक्षिणामूर्ति अष्टोत्तर शतनाम स्तोत्रं सम्पूर्णम् ॥